# अर्थसङ्ग्रहः

### मङ्गलाचरणम्

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः । कुरुते जैमिनिनये प्रवेशायार्थसङ्ग्रहम् ॥१॥

## तन्त्रारम्भकसूत्रावतरणम्

अथ परमकारुणिको भगवाञ्जैमिनिः धर्मविवेकाय द्वादशलक्षणीं प्रणिनीय तत्रादौ धर्म जिज्ञासां सूत्रयामास- 'अथातो धर्मजिज्ञासा' (जै.सू.१.१.१) इति। अत्र 'अथ' शब्दो वेदाध्ययनान्तर्यवचनः। 'अतः' शब्दो हि वेदाध्यनस्य दृष्टार्थत्वं ब्रूते ।

## धर्मविचारशास्त्रस्य आवश्यकता

'स्वाध्यायोऽध्येतव्यः'(तै.आ. २.१५.७; श.ब्र. ११.५.६.३.) इत्यध्यनविधौ ,तदध्ययनार्थज्ञानरूपदृष्टार्थकत्वेन व्यवस्थापनात्। तथा च- वेदाध्यनानन्तरं यतोऽर्थज्ञानरूपदृष्टार्थकं तदध्ययनम्, अतो हेतोर्धर्मस्य जिज्ञासा 'कर्त्तव्या' इति शेषः। जिज्ञासापदस्य विचारे लक्षणा। अतो धर्मविचारशास्त्रमिदमारम्भणीयमिति शास्त्रारम्भसूत्रार्थः।

## धर्मलक्षणप्रश्नः

अथ को धर्मः ? किं तस्य लक्षणम् ? इति चेत्, उच्यते- यागादिरेव धर्मः । तल्लक्षणम्- वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः । "चोदनालक्षणोऽर्थो धर्मः" इति। प्रयोजनेऽतिव्याप्तिवारणाय वेदप्रतिपाद्य इति । भोजनादावतिव्याप्तिवारणाय 'वेदप्रतिपाद्यः' इति । अनर्थफलकत्वादनर्थभूते श्येनादावतिव्याप्तिवारणाय 'अर्थः' इति ।

## वेदस्य धर्मप्रतिपादकत्वम्

न च - 'चोदनालक्षणोऽर्थो धर्मः' (जै.सू. १.१.२) इति सौत्रतल्लक्षणविरोधः, चोदनापदस्य विधिरूपवेदैकदेशपरत्वात् इति वाच्यम् । तत्रापि चोदनाशब्दस्य वेदमात्रपरत्वात्। वेदस्य सर्वस्य धर्मतात्पर्यत्वेन धर्मप्रतिपादकत्वात् । स च यागादिः 'यजेत स्वर्गकामः' इत्यादिवाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते। तथा हि - 'यजेत' इत्यत्रास्त्यंशद्वयम् 'यजि' धातुः, प्रत्ययश्च । प्रत्ययेऽप्यस्त्यंशद्वयम् 'आख्यातत्वं', 'लिङ्त्वं च' । तत्राख्यातत्वं दशलकारसाधारणम्, लिङ्त्वं पुनर्लिङ्मात्रे ।

## भावनाविचारः

उभाभ्यामंशद्वयाभ्यां भावना एव उच्यते । भावनालक्षणम् - भवितुः भवनानुकूलो भावयितुः व्यापारविशेषः । सा द्विधा - 'शाब्दीभावना', 'आर्थीभावना' चेति ।

## शाब्दीभावना

तत्र पुरुषप्रवृत्यनुकूलो भावयितुः व्यापारविशेषः शाब्दीभावना । स च लिङशेनोच्यते । लिङ्श्रवणे 'अयं मां प्रवर्तयति', 'मत्प्रवृत्त्यनुकूलव्यापारवानयम्' इति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियमतः प्रतीयते तत्तस्य वाच्यम्। यथा - 'गामानय' इत्यस्मिन् वाक्ये गोशब्दस्य 'गोत्वम्'।

## शाब्द्या लौकिकवैदिकभेदौ

स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः । वैदिकवाक्ये तु पुरुषाभावात् लिङ्गादिशब्दनिष्ठ एव । अत एव शाब्दी भावना इति व्यवह्रियते । सा च भावना अंशत्रयम् अपेक्षते । साध्यं साधनम् इति कर्तव्यतां च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ? इति ।

तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेतां आर्थीभावना साध्यत्वेन अन्वेति एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः । संख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वात् न साध्यत्वेन अन्वयः । साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेन अन्वेति । तस्य च करणत्वं न भावनोत्पादकत्वेन, तत्पूर्वमपि तस्याः शब्दे सत्वात् । किन्तु भावना ज्ञापकत्वेन शब्दभावनाभाव्यनिवर्तकत्वेन वा । इति कर्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशत्यमितिकर्तव्यतात्वेन अन्वेति ।

## आर्थीभावनाया अंशत्रयम्

प्रयोजन इच्छाजनितक्रियाविषयव्यापार आर्थीभावना । सा च आख्यातत्व अंशेन उच्यते आख्यातसामान्यस्य व्यापारवाचित्वात् । साप्यंशत्रयम् अपेक्षते । साध्यं साधनम् इति कर्तव्यतां च । किं भावयेत् ? केन भावयेत् ? कथं भावयेत् ? इति । तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेन अन्वेति । साधनाकाङ्क्षायां यागादिः करणत्वेन अन्वेति । इति कर्तव्यताकाङ्क्षायां प्रयाजादि अङ्गजातमिति कर्तव्यतात्वेन अन्वेति ।

## वेदलक्षणविचारः

अथ को वेदः ? इति चेत् । उच्यते - अपौरुषेयं वाक्यं वेदः । स च विधि- मन्त्र- नामधेय-निषेध-अर्थवादभेदात् पञ्चविधः ।

## विधिमीमांसा

तत्र अज्ञातार्थज्ञापको वेदभागो विधिः । स च तादृशप्रयोजनवत् अर्थविधानेन अर्थवान् यादृशं च अर्थं प्रमाणान्तरेण अप्राप्तं विधत्ते यथा- “अग्निहोत्रं जुहुयात्स्वर्गकाम” इति विधिः मानान्तरेण अप्राप्तं स्वर्गप्रयोजनवद् होमं विधत्ते अग्निहोत्रहोमेन स्वर्गं भावयेत् इति वाक्यार्थबोधः ।

यत्र कर्म मानान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रं विधत्ते - यथा “दध्ना जुहोति” इत्यत्र होमस्य अग्निहोत्रं जुहुयात् इत्यनेन प्राप्तत्वात् होमोद्देशेन दधिमात्रविधानं ‘दध्ना होमं भावयेत्’ इति । यत्र तु उभयम् प्राप्तं तत्र विशिष्टं विधत्ते - यथा “ सोमेन यजेत्” इत्यत्र सोमयागयोः अप्राप्तत्वात् सोमविशिष्टयागविधानम् । सोमपदे मत्वर्थलक्षणया सोमवता यागेन ईष्टं भावयेत् इति वाक्यर्थबोधः ।

## वाक्यभेददोषपरिहारः

न च उभयविधाने वाक्यभेदः, प्रत्येकम् उभयस्य विधानात्, किन्तु विशिष्टस्यैव विधानात् ।

## गुणविध्यादिभेदः

न च “ज्योतिष्टोमेन स्वर्गकामो यजेत् ” इति विधिप्राप्तयागोद्देशेन सोमरूपगुणविधानमेव अस्तु , सोमेन यागं भावयेदिति किं मत्वर्थलक्षणया इति वाच्यम् । तस्य अधिकारविधित्वेन उत्पत्तिविधित्वेन असंभवात् ।

## उभयविधित्वम्

ननु “उद्भिदा यजेत पशुकाम” इत्यस्येव ज्योतिष्टोमेन इत्यस्य उत्पत्यधिकारविधित्वम् अस्तु इति चेत्, न । दृष्टान्ते उत्पत्तिवाक्यान्तराभावेन अन्यथा अनुपपत्त्या तथात्वाश्रयणात् । किञ्च ज्योतिष्टोमेन इत्यस्य उभयविधित्वे अनेनैव यागस्तस्य फलसम्बन्धोऽपि बोधनीय इति सुदृढो वाक्यभेदः । तद्वरं सोमपदे मत्वर्थलक्षणया विशिष्टविधानम् ।

## विधिश्चतुर्विधः

विधिश्चतुर्विधः - उत्पत्तिविधिः विनियोगविधिः अधिकारविधिः प्रयोगविधिश्चेति ।

## उत्पत्तिविधिः

कर्मस्वरूपमात्रबोधको विधिः उत्पत्तिविधिः । यथा - “अग्निहोत्रं जुहोति” इति । अत्र च विधौ कर्मणः करणत्वेन अन्वयः, अग्निहोत्रहोमेन ईष्टं भावयेत् इति ।